तस्य च वेदस्य वाङ्मयत्वाविशेषेऽपि न भारतादिवत् पौरुषेयत्वमनित्यत्वं (?) वा संभाव्यम् । दृश्यते हि लोके सर्वेषामर्थजातानां प्राकृतत्व कृत्रिमत्वाभ्यां विभक्तिः स्वारसिकी । स यथा भूमये जलमये तेजोमये वायुमये वा प्रपञ्चे: द्वैविध्येनोपचार प्रवर्तते, एवमविशेषादिहापि शब्द प्रपञ्चे द्वैविध्यं स्थाने प्राप्तं भवति । स यथा वनपर्वतनद्यादयः प्राकृता अर्थाः, उपवनस्तूपकुल्यादयस्तु कृत्रिमा इति विभागः साधीयान् प्रतीयते; एवमिमे वेदाः सर्वेप्राकृता अर्थाः, अथ कृत्रिमा भारतादय इति विभागो पक्लृप्तिपिनतरां न सम्भाव्यते । यथा खलु वायुतेजो जलादयो नित्या एव पदार्था ईश्वरेच्छावशात् कदाचित् संश्लिष्य कदाचिद्विश्लिष्य विशिष्टसंनिवेशयुक्ताः सन्तः सृष्टिप्रलयाभ्यां नियतव्यवस्थानुसारेण जगच्चक्रमेतन्निर्वाहयन्ति, तथैवायं जगदन्तर्गतः शब्दोऽपि नित्य एवेश्वरीयशक्त्यावेशात् तदिच्छानुसारेण च सृष्टिकाले ऋग्यजुरादिप्रकारः संश्लिष्य प्रलयकाले च विश्लिष्यावतिष्ठते न तु केनचिदुत्तरकाले योनिजविग्रहवता पुरुषेण सपरिकरं सानुसन्धानं संनिवेशविशेषेण गुम्फ्यते । नित्यानां वायुतेजोजलादीनां संनिवेशविशेषसंसिद्धौ यावानीश्वरेच्छाया उपयोगस्तावानविशेषमिहापि नित्यानां शब्दानां सन्निवेशविशेषसंसिद्धौ द्रष्टव्य इत्ययमेवार्थः संसूच्यते—

"नित्या वागुत्सृष्टा स्वयम्भुवा"

इत्येवमादिषु श्रुतिवचनेषु । अत्र नित्या वागित्युक्तिः प्रलयकाले विश्लिष्टावयवानां विनष्टसन्निवेशानामपि तत्त्वनस्तदविनाशं दर्शयति । सन्निवेशविशेषश्च तेषां शब्दानां सृष्ट्यादौ यथा पूर्वं भवत्येव । एतदभिप्रायेणैव—

"सैषा त्रयी विद्या प्रथमं जायते" ( शत० ब्रा० २।३।२० )

इति सर्वभूतजातोत्पत्तेः प्रागमुष्य वेदस्योत्पत्तिराम्नायते । यथैव तु तत्त्वतो विनाशस्यासंयोगादमुष्मिन् वेदे नित्यापौरुषेयत्वविवक्षा क्रियते, तथैवेदानीम् सन्निवेशविशेषसंयोगादुत्पत्तिविवक्षापि तत्र क्रियते । तथा चैवं सन्निवेशविशेषस्यानित्यत्वप्राप्तावपिनत्वेव तावता वेदानामनित्यत्वं शक्यमभ्युपगन्तुम् , संवेशोपवेशप्रस्थानावस्थानादिनानाविधसन्निवेशविशेषसंयोगेऽपि देवदत्तव्यक्तेरनन्यत्वाभ्युपपत्त्या सन्निवेशपदार्थस्य तद्वस्तुस्वरूपानन्तर्भावात् । तस्मान्नित्योऽयं प्राकृतश्रेणीभुक्तोवेदोऽपौरुषेयश्चेति संसिद्धम् ।

इदं तु बोध्यम्-ईश्वरेच्छावशात् स्वयमेव सम्भवन्नापि समन्निवेशः शब्दानां न वाय्वा दिवदिहान्तरिक्षे पर्याप्नुवन् प्रवर्तते, किन्तु नाम तपोविशेषाद्विशुद्धहृदयानां महर्षीणां बुद्धिक्षेत्रेष्वेव तेषां प्राथमिकी प्रवृत्तिः सञ्जातेति सम्भवतो विज्ञायते । वर्णात्मकशब्दस्य बुद्धिमनपेक्ष्य प्रवृत्तेरस्वाभावात् । तथा चायमर्थः स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा ॥ १ ॥ इति ।

ईश्वरीयज्ञानानुसारेण स्वयमेव गुम्फिताः सर्वे शब्दा ऋगादिभावेन परिणम्य महर्षीणां वसिष्ठादीनां वेदरचनार्थमप्रयतनानामपि बुद्धिं स्वयमेवारूढाः प्रादुरभूवन्निति "महर्षयो लेभिरे" इत्यस्यार्थः । एतदभिप्रायेणैव —

"मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानित्रेतायां बहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके । १ ।" ( मुण्डकोपनिषत् २ खं० )

"तद्वा ऋषयः प्रतिबुबुधिरे य उ तर्हि ऋषय आसुः"

[ शत० ब्रा० २ । २ । १ । १४ ]

इत्येवमादिषु मन्त्रब्राह्मणवचनेषु महर्षीणां द्रष्टृत्वमाम्नायते सर्वेषु वा मन्त्रेषु तत्तन्महर्षीणामार्षेयं स्मर्यते । तदित्थमनेकेषां महर्षीणां बुद्धिक्षेत्रेष्वेव सन्निवेशविशेषरूपतामागत्य प्रादुर्भवन्नप्ययं वेदो न महर्षिकृतत्वेन प्रतिपद्यते न तु वातावतैवानित्यत्वमप्यस्यापद्यते । वाय्वादिनित्यार्थसमशीलत्वाच्छब्दानाम् यथा हि गृहगुहाविवरनलिकादिविलक्षणविन्यासविशिष्टेषु तेषु तेषु क्षेत्रविशेषेषु तत्तत्क्षेत्रसन्निवेशानुसारेण विशिष्टसन्निवेशोपलब्धावपि तैस्तैरेतैर्गृहगुहानलिकादिभिरचेतनैः स स सन्निवेशो वाय्वादीनामक्रियतेति न कश्चित् प्रज्ञावानुत्सहते विश्वसितुम् । एवमेव खलु वसिष्ठविश्वामित्रभृग्वङ्गिरोऽत्रिप्रभृतिमहर्षीणां विलक्षणविन्यासविशिष्टेषु हृदयक्षेत्रेषु वैलक्षण्येन सन्निवेशोपलब्धावपि तैस्तैरचेतनैर्वसिष्ठादीनामान्तः करणैः स स सन्निवेशो वेदानामक्रियतेतिको नाम सहृदयः श्रद्धातुमीहेत । तस्माद्वसिष्ठादिकर्तृकत्वप्रकल्पनं नितान्तं भ्रान्तम् । अन्यदपि च वसिष्ठादीनामार्षेयसंबन्धेन बहु वक्तव्यमस्ति तदुत्तरतः सर्वमृषिनिरूपण प्रकरणे सविशदं निरूपयिष्यामः । इह तु महर्षीणां बुद्धिक्षेत्रेष्वासीदमीषां वेदानां प्रथम विकाश इत्येवं तावन्निरूपितम् ।

अथेदमन्यद् द्रष्टव्यम् । अनेकधा हि बुद्धयः प्रकल्पन्ते-यत् तावदिह किञ्चित् पश्यति तन्नु बुद्धिं कुरुते, यद्वाकिञ्चिदिह श्रृणोति, तत् खलु बुद्धिं कुरुते । एवमन्यच्चान्यच्च । तत्र बुद्धिं कुर्वाणः स शब्दं प्रयुञ्जान एव बुद्धिं कुरुते । न शब्दमनन्तर्भाव्यकस्यापि बुद्धिः शक्नोति स्वरूपमाधातुम् श्रूयते चायमर्थः कौषीतकीयश्रुतौ—

**"यच्चक्षुषा पश्यति न तच्चक्षुषाऽऽह—"इत्यद्राक्षमिति" । वाचैवतदाह तच्चक्षुर्वाचमप्येति-वाङ्मयं भवति । अथ यच्छ्रोत्रेण शृणोति, न तच्छ्रोत्रेणाह—"इत्यश्रौषमिति" । वाचैवतदाह । तच्छ्रोत्रं वाचमप्येति, वाङ्मयं भवति । अथ यन्मनसा संकल्पयते-न तन्मनसाऽऽह "इनि समचीक्लृपमिति" वाचैव तदाह । तन्मनो वाचमप्येति वाङ्मयं भवति ॥" इति ।**

तत्र योऽयं दर्शनश्रवणयोर्बुद्धिविशेषयोर्नान्तरीयकः खल्वपि शब्द प्रयोगः प्राप्नोति तस्यैतस्य यावद्विज्ञाननित्यत्वान्नित्यापौरुषेयवेदत्वं केचन मन्यन्ते तदसत् । आनुश्राविकस्यैव शब्दप्रयोगस्य वेदपदार्थत्वाभ्युपगमात् । विज्ञाननित्यस्य तु शब्दप्रयोगस्य विज्ञानस्वरूपाधायकत्वेऽपि श्रवणे विनियोगायोग्यत्वात् । तस्माच्छ्रोत्रनित्य एव कश्चन शब्दविशेषो वेद इत्यवधेयम् ।

शब्दश्च तावत् सर्वोऽपि चतुर्धा विभज्य गृह्यते-दिव्यभाषा च परीक्षकभाषा च तर्कभाषा च लोकभाषा चेति । तत्राप्तं वाक्यं दिव्यभाषा च परीक्षकभाषा च । आप्तमिति यथाभूतमर्थं प्राप्तमाह । तेन वक्तारमनाकलय्यैव यत्र वाक्ये सत्यमर्थमिदमाप्तमस्तीति श्रद्धा सम्पद्यते सा दिव्यभाषा च परीक्षकभाषा च, तत्प्रमाणम् आप्तत्वादप्रामाण्याप्रसक्तेः । एतच्चाप्तं वाक्यं द्वेधा-अपौरुषेयं च पौरुषेयं चेति । अकृत्रिमत्वात् पुरुषप्रयत्नासाध्यमपौरुषेयम् । सा दिव्यभाषा भवति । यत्पुनरपरं पौरुषेयं सा परीक्षकभाषा भवति । तत्र तावद्दिव्यभाषेयमेकान्ततः सत्यमेव ब्रूते नासत्वमित्याप्तमुच्यते । सत्यं हि प्रमाणतमममविचालि ब्रह्मतत्वं यज्ञो वा प्रजापतिर्नाम तस्य च नित्यं सत्यत्वमाहुः-सर्वेषामुपादानत्वेन सर्वत्रा व्ययरूपेणोपलभ्यमानत्वात् । तथाविधनित्यसत्यार्थप्रतिपादकत्वाद् ऋग्यजुः सामसंहितादिप्रतीतं सर्वमेव वाक्यजात सत्यमेवार्थमाप्तमस्तीति कृत्वा आप्तं वाक्य'मत्युच्यते । सत्यार्थप्रतिपादकं च वाक्यजातं न जातु प्रमाणं भवितुमर्हतीत्यत एवैतदसन्दिग्धप्रामाण्यकं वाक्यजातं दिव्यभाषाशब्देनाख्यायते, स एष वेदो नामशब्दः ।

अथपौरुषेयमाप्तं वाक्यं व्याख्यास्यामः । द्वयं वा इदं सर्वम्-सत्यं चैवानृतं च । उपादानकारणं सत्यम्, तदुपात्तं कार्यमनृतम् । यथा मृत्सत्या इह कृता घटादयस्त्वनृताः । तत्र कार्यपरम्परायां सदेवैकं ब्रह्मनाम सत्यं मुख्यवतिष्ठते । तथा च सर्वेषामुपादानत्वात् सर्वतः सत्यं तदिदं ब्रह्मनामैकं तत्त्वम्, तद्विज्ञानप्रधानं वाक्यजातमाप्तत्वात् स्वतः प्रमाणम् वेदशब्देनाख्यायते इति हि प्राग् व्याख्यातम् । तदितरत्तु यत्किञ्चिदेवेह दृश्यते तत्सर्वं कार्यत्वसापेक्षमनृतं च भवति, कारणत्वापेक्षं सत्यं च । तद्विज्ञानप्रधानं तु वाक्यजातं सत्यानृतपरत्वाद् गौणं सत्यमाप्तं च विवक्ष्यते, मुख्यं सत्यमनाप्तं च । तस्मादेवेदं प्रमाणं च भवत्यप्रमाणं च, सत्यार्थज्ञानजनकस्यैव प्रमाणपदार्थत्वात् । अतएव नित्यप्रमाणवेदापेक्षयैतेषामुत्तरतन्त्राणां प्रेक्षावद्वाक्यानां चावरकत्वाकं प्रामाण्यं पर्यवसीयते । एवं विधप्रामाण्यवादिह सर्वं वाक्यजातं परीक्षकभाषा भवति । स एष आप्तोपदेशो नाम शब्दः, उपदेशस्यैवाप्तत्वात् ।

अथाप्तस्य वाक्यं तर्कभाषा । द्वैविध्यमिदं दृश्यते लोकेक्वचित्तावदिह वक्तुराप्तत्वग्रहणात् तदुक्तौ प्रामाण्यं गृह्यते । अथ क्वचित् प्रमाणान्तरेण संवादाद्वा विसंवादाभावाद्वा वाक्यस्यैव-तावदाप्तत्वं सुगृहीतं भवतीत्यतो वचनस्याप्तत्वग्रहणात् तन्निबन्धनमेव तद्वक्तरि सुतरां प्रामाण्यं गृह्यते । तदित्थं यत्र वक्तुः प्रामाण्यमनपेक्ष्यैव नूनं वचनप्रामाण्यं लभ्यते सा दिव्यभाषा च परीक्षकभाषा चेत्युक्तं प्राक् । यत्र पुनर्वक्तुः प्रामाण्यमपेक्ष्यैव तत्र वचने प्रामाण्यं संसाध्यते सेयमन्या तर्कभाषा भवति ।

अथवैतदन्यथा व्याख्यास्यामः । इदं हि परीक्षकभाषारूपं द्वितीयं शब्दजातं पुरुषमतिवैषम्यात् दृष्टानेकसमयव्यभिचारं भवतीत्यतः प्रमाणान्तरसंवादमन्तरेणेदं सत्यमाप्तमनाप्तं वेत्येव प्रामाण्यविषये नितरां संदिह्यते । सुतरामिदं स्वप्रामाण्यसंपत्तये वक्तराप्तत्वं प्रागपेक्षते । तच्चेत् पुनराप्तस्य वाक्यत्वेन गृह्यते. तदातदाप्तस्य सत्यनिष्ठत्वश्रद्धानात् तदुक्तावुत्पद्यते श्रद्धा, तथा च गृह्यते तत्प्रामाण्यमन्यथा न गृह्यते तत्प्रामाण्यम् । तदित्थं यत्र तर्काधीनं प्रामाण्यं चाप्रामाण्य च व्यवतिष्ठते तदिह वाक्यजातं तर्कभाषा भवति । सोऽप्येष आप्तोपदेशो नाम शब्दः, उपदेशकस्य तत्राप्तत्वात् ।

अथानाप्तस्य वाक्यमनाप्तं वा वाक्यं लोकभाषा । एतच्च न प्रामाण्येनानुगृह्यते, अर्थमैनाप्नुवतो वचनस्य नूनमप्रमाणत्वात् ।

परेत्वाहुः—इह केवलमनाप्तं वाक्यमेवाप्रमाणं भवितुमर्हति नानाप्तस्य वाक्यमपि। अभ्युपगम्येत हि लोके शाकुनिकैः कालविशेषे कथोपकथादिप्रसङ्गात् प्रयुक्तस्य रजकाद्यन्त्यजभाषितकस्य भवितव्यार्थ प्रत्यायकतया दृढं प्रामाण्यम्। स यद्यपि रजकादिर भूद्दशं भवितव्यमर्थमनाप्यैव तावदित्थं भाषत इति दृश्यते तथापि तत्तथा वाक्यमभूद्दशं भाविनमर्थं न व्यभिचरतीत्येवमाप्तत्वान्न त्वेव तन्नप्रमाणं भवति तस्मादनाप्तमेव हि वाक्यमप्रमाणं च लोकभाषा चेति संसिद्धम्।

वाक्य प्रयोग सम्बन्धे चेदमिह द्वैविध्यं भवतिविज्ञानानिबन्धनो वाक्प्रयोगो वाकप्रयोगनिबन्धनं च विज्ञानमिति। विज्ञाय तु कश्चिदपूर्वं कश्चिदर्थं परस्मे ज्ञापयितुं वाचः प्रयुङ्क्ते। अथाकर्ण्य परस्य वाक्प्रयोगं परः कश्चिदपूर्वं कश्चिदर्थं विजानाति। अपि च पश्यामः—प्रत्यक्षयोग्यां सास्नादिमतीं काञ्चिद् व्यक्तिमुपलभ्य गौरिती शब्द भावयति। अनुपाख्यमपि तत्तद्विषयजातमुपलभ्यासौ नान्तरेण तत्तदुचितं शब्दं भावयति। तथैतद्वैपरीत्येनापि पश्यामः—गौरिति शब्दं भावयमानः साम्नादिमत्यां व्यक्तौ बुद्धिं कुरुते, मन्त्रवाक्यं वा श्रुत्वा मननीये वाक्यार्थविशेषे बुद्धिं कुरुते। तदित्थ वाक प्रयोगनिबन्धने विज्ञाने जाते पुनरयं विज्ञाननिबन्धनो वाक्प्रयोग प्रसज्जते। स एष द्विविधः शव्द प्रयोगः संसिद्धः। दृष्टवा कञ्चिदर्थं शब्दं प्रयुञ्जानस्यैष दृष्टिनिबन्धन एकः। श्रुत्वा कञ्चिदर्थं शब्दं प्रयुञ्जानस्यैष श्रुतिनिबन्धनोऽन्यः। तत्रायमाद्यः श्रुतिशब्देनाभिनीयते द्वितीयस्तु स्मृति शब्देन। यथा हि श्रवणं श्रुतिः, स्मरणं स्मृतिः इति भावव्युत्पत्तिः, एवमिह यतोऽर्थः श्रूयते सा भाषा श्रुतिः, यतोवाऽर्थः स्मर्यते सा भाषा स्मृतिरिति करणव्युत्पत्तिरपि स्थानेऽभ्युपगम्यते अयमत्राभिसन्धि दृश्यते हि लोके एक कश्चित् पश्यति च व्याहरति चानुब्रूते च। अपरः कश्चिच्छृणोति च व्याहरति चानुब्रूते च। तत्र तावदयं यत्पश्यति तन्नूनं व्याहरति। नानारीयकमिदं द्वयं भवति, व्याहरन्नेवासौ पश्यति न पश्यन् कश्चिदव्याहरन् पश्यति। अथ यथायं पश्यति तथा परस्मा अनुब्रूते अनूचानश्चायमाप्तः प्रमाणो क्रियते अर्थं दृष्टत्वात्। अत एवाज्ञावाप्तेषु प्रथमो विवक्षितः।

एवमयमन्यो यच्छृणोति तन्नूनं व्याहरति, नान्तरीयकमिदं द्वयं भवति। व्याहरन्नेवासौ शृणोति, न शृण्वन् कश्चिदव्याहरन् शृणोति। अथ यथायं शृणोति तथा परस्मा अनुब्रूते। अनूचानश्चायमाप्तप्रायोऽभिसन्धीयते, अर्थ श्रोतृत्वात्। अत एवासावाप्तेषु द्वितीयो विवक्षितः। तत्र यदिद दृष्ट्वानुब्रूते साश्रुतिः, दर्शनेऽभिनीतस्यार्थस्य तेनानुवचनेन श्रवणेऽवतार्यमाणत्वात्। अथ यच्छ्रुत्वानुब्रूते सः स्मृतिः, दृष्टशब्देनानुभावितस्यैवार्थस्य पुनरनेन श्रोतृशब्देनानुभाव्यमान-

वात् । यथैव खल्वनुभूतस्य भूयोऽनुभवनं स्मृतिरित्युच्यते, एवमिदमनुभावितस्याप्यर्थस्य भूयोऽनुभावनमुच्यते स्मृतिरेव । अनुभवननित्यत्वादनुभावनस्य तथात्वे बाधकाभावात् । तथा च द्रष्टृवाक्यंश्रुतिः, श्रोतुर्वाक्यं स्मृतिरित्येषा परिभाषा सिद्धा ।

तयोश्चैषा श्रुतिरेकान्ततः स्वतः प्रमाणंभवति, निरपेक्षत्वात्स्वप्रामाण्ये परप्रत्ययानाश्रयणात् । अथैषा स्मृतिरेकान्ततः परतः प्रमाणं भवति, श्रुतिमास्थायैव तेनार्थसंसाधनात्, द्रष्टृवाक्याधारेणैव तदवस्थानात् । अस्ति हि द्रष्टृवाक्यं प्रमाजनकमिति कल्पते श्रोतुर्वाक्यं प्रमाजननाय । यावता द्रष्टृवाक्यं न प्रामाण्येनावधीयते न तावता जातुचिच्छ्रोतुर्वाक्ये श्रद्धीयते । तस्माच्छ्रुतिप्रामाण्यनिबन्धनप्रामाण्यकं स्मृतिवाक्यं नतरां परतः प्रामाणं न भवति । आम्नायते च वेदेऽपि द्रष्टृवाक्यविरुद्धस्य श्रोतृवाक्यस्य नूनमप्रामाण्यं लोकदृष्टान्तेन । तथा हि—

"एतद्ध वै मनुष्येषु सत्यं निहितं यच्चक्षुः । तस्मादाचक्षाणमाहुः अद्राग् ? इति । स यद्यदर्शमित्याह-अथास्य श्रद्धाति । यद्य वै स्वयं पश्यति, न बहूनां च नान्येषां श्रद्धाति" (ऐतरेय श्रुतिः) ।

"सत्यं वै चक्षुः । सत्यं हि वै चक्षुस्तस्माद्-यदिदानीं द्वौ विवदमानावेयताम्-'अहमदर्शम्' 'अहमश्रौषम्' इति । य एव ब्रूयाद 'अहमदर्शम्' इति, तस्मा एव श्रद्धयाम" इति । (शतपथ श्रुतिः) ।

एतेन सर्वस्यापि द्रष्टृर्वाक्यस्य श्रुतित्वं स्वतः प्रामाण्यं च, तथा सर्वस्यापि श्रोतुर्वाक्यस्य स्मृतित्व परतः प्रामाण्यं चेत्यर्थद्वयं निष्प्रतिपक्षं संसिद्धम् ।

अथ यद्वाक्यं नार्थद्रष्टुर्न वार्थश्रोतुः संभाव्यते-अपि तु प्रमाणान्तरविरोधान्मत्तभाषितमिवापार्थं वा व्याहतार्थं वा विज्ञायते, तदिह न श्रुतिर्न वा स्मृतिः, अपि तु तृतीयो विभागः प्रलपितं नाम कल्पते । तदित्थं त्रेधाशब्द विभक्तिः सिद्धा-स्वतः प्रमाणभूता श्रुतिः प्रथमा । परतः प्रमाणभूता स्मृतिर्द्वितीया ; अप्रमाणभूता प्रलापोक्तिस्तृतीया । यावानेव शब्दः प्रयुज्यमानो लोके, कुत्रापि लक्ष्यते-देवानां ऋषीणां वा आर्याणां वा म्लेच्छानां वा, सर्वत्रैव तत्रेदं त्रैविध्यमुपपद्यते ।

तत्र योऽयं वेदो नाम शब्दः पूर्वं व्याख्यातस्तस्मिंस्तावदिदं द्वैविध्यमुपलभ्यते–अस्ति किंचिद्वाक्यजातं स्वतः प्रमाणभूतं श्रुतिर्नाम, अस्ति च किंचिद्वाक्यजातं परतः प्रमाणभूतं स्मृतिर्नाम। अप्रमाणभूतं तु तृतीयं वाक्यजातं न तत्रोपलभामहे। तथा हि–सन्तीमे मन्त्रास्तत्र श्रुतयः, सन्तीमानि ब्राह्मणानि तत्र स्मृतयः इत्यासीत्प्रतिपत्तिः पुराकल्पे। संप्रति कल्पे तु मन्त्राश्च ब्राह्मणानि च सन्ति श्रुतयः, अथ गाथाश्च सूत्राणि च सन्ति स्मृतयः इत्येव दृश्यते भूयसी प्रतिपत्तिः। तथा हि यावन्ति नामेदानीं ब्राह्मणानि पश्यामः, सर्वत्रैव तत्र खलु पौराणिकार्थनिरूपणप्रसङ्गेन मन्त्रः प्रमाणीक्रियते "तदेतत्पश्यन्नृषिरभ्यनूवाच" इत्यादिना। तेनावश्यमयं ब्राह्मणग्रन्थः स्वस्मिन् स्मृतित्वमाकुरुते इति लभ्यते। अथ यावन्ति सूत्राणि श्रौतानि पश्यामस्तानि खल्वेषामुभयेषां मन्त्र ब्राह्मणानां प्रामाण्येन प्रवर्तमानानि दृश्यन्ते। स्पष्टमयमर्थः सूच्यते च-तथा हि कौशिकं श्रौतसूत्रम् "अथ विधिं वक्ष्यामः। स पुनराम्नाय प्रत्ययः। आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च" इति। तेनावश्यममीषां सूत्राणां स्मृतित्वमथोभयेषां मन्त्र ब्राह्मणानां श्रुतित्वमित्यायातम्। तथा च मन्त्रेषु श्रुतितत्वमेव, स्वार्थप्रत्यायने इतरानपेक्षत्वात्। सूत्रेषु च स्मृतित्त्वमेव, स्वार्थप्रत्यायने मन्त्रब्राह्मणादि द्रष्टृवाक्यापेक्षित्वात्। अथ ब्राह्मणेषु च गाथासु च विद्यते श्रुतित्वं च, स्मृतित्वं च। कल्पभेदात् प्रतिपत्तिभेदाच्च तथात्वे बाधकाभावात्। अथवा दृश्यते ब्राह्मणेषु मन्त्र गाथयोः, गाथासु च मन्त्रब्राह्मणयोः, प्रामाण्यविधया संप्रवेश इत्यतो द्रष्टृवाक्यं श्रुत्वा प्रवृत्तिदर्शनात्तयोः स्मृतित्वंप्राप्नोति, अथ भूयांसि खलु ब्राह्मणवचनानि गाथावचनानि च मन्त्राद्यनपेक्षं स्वप्रामाण्येनैव प्रवतमानानि दृश्यन्ते, तेन द्रष्टृवाक्यत्वोपपत्तयातयोः श्रुतित्वं प्राप्नोति, तस्मात् सिद्धं ब्राह्मणगाथयोरंशतः श्रुतित्वं च स्मृतित्वं चेति भाव्यम्। अथ वा द्विविधाश्चेह ब्राह्मणग्रन्था दृश्यन्ते मन्त्रसंहिता शेषभूताश्च, मन्त्रसंहिताभाष्यभूताश्च। आद्यास्तैत्तिरीयब्राह्मणादयः तेश्रुतिशब्दा एव स्युः। परे शतपथ ब्राह्मणादयः, ते स्मृतिशब्दा अपि स्युः। त इमे श्रुतिस्मृति वेदाख्यायां दिव्यभाषायां व्याख्याते। तृतीया तु प्रलापोक्तिरसत्यपि सत्यांशे विसंवादात्प्रसज्जते, एकमेव हि वाक्यं वाक्यार्थो वा केनचित्प्रमाणीक्रियते, अपरेण विगीयते। प्रतिपत्तिभेदादित्थं प्रामाण्ये द्वैविध्यमवतिष्ठते। यथाहि–श्रमणाः क्रियाप्रधानाः श्रमस्य क्रियारूपत्वात्। ज्ञानप्रधानाः, ब्राह्मणो ज्ञानरूपत्वात्। क्रियैकाद्वयवादिनः श्रमणाः, ज्ञानैकाद्वयवादिनो ब्राह्मणाः। श्रमणा अनीश्वरवादित्वात्पौरुषेयमात्रप्रवणाः, ब्राह्मणास्त्वीश्वरवादित्वाद्-

ब्रह्मनियतिश्रद्धानाः । "यदहं करिष्यामि तदेव भविष्यति न तु कश्चिन्नियन्तास्तीति" श्रमणा आतिष्ठन्ते, "ईश्वरकृतनियत्यनुसारेणैवेदं सर्वं भवति-न तद्विरोधेन वयंकिमपि कर्तुं शक्नुम" इति ब्राह्मणाः । स्वतन्त्रता वयमित्युन्मर्यादाः श्रमणाः, ईश्वरपरतन्त्रा वयमिति मर्यादादीक्षिता ब्राह्मणाः । श्रमणा बौद्धाः, ब्राह्मणा वैदिकाः । इत्थमानयोः श्रमणब्राह्मणयोः प्रतिपत्तिभेदाच्छ्र-मणमतं सत्यम्, ब्राह्मणमतं त्वप्रमाणमिति बौद्धाः, अथ ब्राह्मणमतं सत्यम्, श्रमणमतं त्वप्रमाण-मितिर्मिति बौद्धाः, अथ ब्राह्मणमतं सत्यम्, श्रमणमतं त्वप्रमाणमिति वैदिकाः । तदित्थं प्रामाण्यं चाप्रामाण्यं चानैकान्तिकं भवति ।

अथैतस्मिन्नाप्तोपदेशात्मके द्वितीये शब्द जातेऽपि यत्रार्थद्रष्ट्रा स्वप्रामाण्येनैव किंचि-दुच्यते सानूनमितरानपेक्षा द्रष्टुर्भाषा श्रुतिः । अथ यत्र स्वयमर्थमदृष्टवतापि द्रष्टृवचनप्रामाण्यादिह कश्चिदर्थः प्रकाश्यते तत्रैषा सर्वापि श्रोतुर्भाषा स्मृतिः । तदित्थमाप्तानां तन्त्रकाराणां व्यावहारिकाणां चोक्तौ द्वैविध्यं द्रष्टव्यम् । तृतीया तु प्रलापोक्तिर्विसंवादात् प्रसज्जते । दृश्यते हि लोके यान्येव कानिचित्केषां चिदाप्तानां वचनानि कस्मिंश्चित् समाजे प्रमाणी क्रियन्ते-श्रद्धातिशयाद् गृह्यन्ते, तान्येवा परस्मिन् समाजेऽपवर्ज्यन्ते, दोषेण दर्शयित्वा विगीयन्ते । तदित्थं प्रामाण्यं चाप्रामाण्यं च समाजभेदात्प्रतिपत्तिभेदाच्च व्यवतिष्ठते । स्वतो दर्शनन्तु निरूपधिकं तत्र सत्यम्, तन्न प्रमाणम्-ततो निवर्तते विसंवादः ।

अथानाप्तवाक्यं न स्वतः प्रमाणं न वा परतः प्रमाणम्, अप्रमाणैकान्तत्वात् । अथाप्याहुः—नेदमेकान्ततोऽनाप्तवाक्यानामप्रामाण्यमेवावकल्पते वक्तुम्, नाटकाभिनयादौ गानरोदन-हर्षशोककरुणामयोपहासमत्सरादीनां वाक्यानामनाप्तानामपि सर्वथा प्रामाण्यदर्शनात् । तस्मादिदं प्रामाण्यं चाप्रामाण्यं च संप्रतिपत्तिनित्यं विवक्षाधीनमनैकान्तिकमित्यविशेषात्सर्वासामसां दिव्यभाषा-परीक्षकभाषा-तर्कभाषा-लोकभाषाणां शक्यं व्याख्यातुमित्थं प्रामाण्यं चाप्रामाण्य चेति दिक् ।

अथान्ये व्याचक्षते इदं तावत्प्रामाण्यं प्रमाजनकत्वं नाम, तत्र कः प्रमापदार्थ इति प्रति पित्सायां केचित्तावदाहुः—'यथर्थानुभवः प्रमा' 'तत्र तद्बुद्धिः प्रमा' इत्यादि, तदसत् । यथार्थायथा-र्थत्वयोस्तदनुगतत्वातदनुगतत्वयोश्च बुद्धिनिष्ठयोस्तदनुभावात्प्रागननुभवात् । अनेनत्वनुभवेन निय-मतः स्वविषयसत्ताऽपि विषयीक्रियत-इति सर्वस्यैकनुभवजातस्य तत्र तद्बुद्धित्व रूपानपायात् ।

उत्तरानुभवेन तु पूर्वानुभवस्य याथार्थ्यायाथार्थ्ये निरूप्येते इति यदाहुस्तदप्यापादद्दष्टत्वाद् भ्रान्तम्। सर्व एव ह्यनुभवः स्वयाथार्थ्यं प्रत्याययन्नेवार्थं प्रत्याययन् दृष्टः । तथा च पूर्वोत्तर कालिकयोविरूद्धार्थयो रप्यनुभवयोरेकेनान्यस्य याथार्थ्यव्याघातो न शक्यमभ्युपगन्तुम्। पूर्वं सत्यत्वेन प्रतीतोऽर्थः पश्चादसत्यत्वेन प्रतीयत इति चेत्तावतोत्तरज्ञानेन बाधात्पूर्वज्ञानस्य भ्रान्तित्वमिवे पूर्वज्ञानेन बाधादुत्तरज्ञानस्यापि भ्रान्तित्वं कस्मान्न स्यात्। उभयथापि तु शक्यं भवितुम् स्यादिह पूर्वं ज्ञानंमयथार्थमुत्तर यथार्थम्, अथवा स्यादेव तु पूर्वं ज्ञानं यथार्थमुत्तरमयथार्थमिति । तत्रेदमशक्यमेकान्ततो निर्द्धारयितुमिदं यथार्थमिदमयथार्थमिति। किञ्च, उत्तरानुभवात् प्राक् पूर्वानुभवः प्रमात्वेन प्रतीत आसीत्, अथोतरानुभवेन स्वविरूद्धस्य पूर्वानुभवस्य त्रैकालिकं प्रमात्वं निराक्रियते—नासीन्नास्ति न भविष्यति पूर्वानुभवो यथार्थ इत्येवं कृत्वा पश्चादस्य भ्रमत्वं संसाध्यते, तत्रेदमेकस्यैव कदाचित् प्रमात्वं कदाचिद् भ्रान्तित्वमित्यसमञ्जसं भवति। कल्प्यतां तावत्-विरूद्धो नामानुभवो यद्युत्तरतः कदाचिदभविष्यत् तदा खलु यस्य भ्रमत्वमापादितमभविष्यत्–तादृशस्यानुभवस्य दैवात् सर्वथैवोत्तरज्ञानानुत्पत्तौ प्रमात्वं वक्तव्यमप्रमात्वं वा, न तावत्प्रमात्वं शक्यं वक्तुम। वस्तुसत्तया तत्र तद्बुद्धेरभावात् । नाप्यप्रमात्वम्, तद्ग्राहकोत्तरज्ञानानुत्पत्तेः। अनुत्पन्नेऽपि बाधज्ञाने बुद्ध्यप्रमात्वं स्वीकरिष्यते चेत्तदा सर्वासामेव बुद्धीनामप्रमात्वापत्तिः प्रसज्जते। तस्मात्तत्र तद्बुद्धिः प्रमा, यथार्थानुभवः प्रमा इत्यादिकमनाप्तोक्तमलक्षणम्। कस्तर्हि प्रमापदार्थ इति चेच्छृणु प्रत्यक्षागमानुमानैरर्थ परीक्षणं तावान्न्या इत्युच्यते, स च प्रत्यक्षागमाश्रितमनुमानमन्वीक्षा नाम। प्रत्यक्षागमाभ्यामीक्षि तस्यैव तर्कवितर्काभ्यां पुनः पुनरीक्षणात्। तदित्थमनयान्वीक्षया प्रत्यक्षानुमिति शाब्दोपाख्यसर्वविधानुभवोत्थापितनानातर्कवितर्कोत्थानप्रत्युत्थानभूमिकासमाप्तौ संशयविपर्ययादिकलाशून्यं किञ्चिदुत्पद्यते चित्तसंतोषकरं पार्ष्टिकं ज्ञानम्—सोऽवगमः। सचात्मविकाशात्म निरस्तप्रत्यक्षादिभेदः 'इदमित्थमेवास्तीति' कृतसत्यताप्राणः सत्यविश्रान्तत्वाच्चित्तविश्रान्तिकरश्च । तद्विज्ञानम्, सा प्रमा । तज्जनकत्वात्तु प्रत्यक्षनुमानागमा ज्ञानरूपास्त्रीणिप्रमाणानि । चक्षुरादीनान्तु परम्परया सिद्धं गौड़ं प्रामाण्यं बालैरभ्युपगम्यते, वास्तविकन्तु प्रामाण्यमनुभवविशेषाणामेवेत्यन्यत्र विस्तरतः प्रपाञ्चितम्।

तत्रान्तः करणावच्छेदेन दोषदर्शनानुकूलवृत्तिमत्त्वं तर्कवितर्कोत्थाने सहकारिकारणमिति यावदनुवर्तते दोषदर्शनानुकूला वृत्तिस्तावदनुवर्तते तर्कवितर्कसमारम्भ इत्यतो नैकत्र प्रतितिष्ठति चित्तम् । तर्काप्रतिष्ठानाच्च तत्समाप्तिभूमिकोत्तरभावी सोऽवगमोऽपि न प्रवर्तते । प्रमानुत्पादकत्वाच्च

न प्रामाण्यं शक्यमवस्थापयितुं कुत्रापि । तथा च तद्विषयकदोषदर्शनानुकूलवृत्तिमतस्तत्राप्रामाण्यमिति निष्कर्षः । कुत्रचित्तु विप्रकीर्णानेकानियतनिमित्तसंयोगादप्रामाण्यप्रयोजकगुणकलापसत्त्वानिश्चयोऽनुवर्तते, स च दोषदर्शनानुकूलवृत्तिप्रतिबन्धिका वृत्तिः श्रद्धानाम् । तथा च श्रद्धातारतम्यानुसारेण सहकारिविगमाचिरेणैव तर्के वितर्कभूमिकासमाप्त्या निष्प्रतिपक्षमुत्पद्यते सोऽवगमः प्रमा नाम । तज्जनकत्वात्तु तज्जनकन्यायशरीरभूतानां प्रत्यक्षानुमानागमोपाख्यानुभवानां प्रामाण्यमविसंवादि जायते । तज्जनकत्वाच्च प्रत्यक्षानुमानागमानामिन्द्रियलिङ्गशब्दरूपाणामपि परम्परया प्रामाण्यमुपचर्यते । तत्प्रभवाच्च केषांचिदाचार्यत्व गुरुत्वादिभिरभिनीतानां व्यक्ति विशेषाणामपि पारम्परिकं प्रामाण्यमुपचर्य्यते–इत्येष प्रामाण्यविद्यानिष्कर्षः । तथा च न प्रामाण्ये वस्तुताथात्म्यमपेक्ष्यते–अपितु श्रद्धानिबन्धनं स्वचित्तसंतोषमात्रम् । अतएव तु पुरुषमतिवैषम्यात् सर्वत्र प्रामाण्याप्रामाण्यविसंवादधाराः प्रवर्तमाना दृश्यन्ते ।

इदन्तु बोध्यम्-अयं तावन्नयायः प्रत्यक्षागमानुमानकृतशरीरः प्रवर्तते, स क्वचित्प्रत्यक्षप्रधान्तः, क्वचित्पुनरागमप्रधानोऽनुमानप्रधानो वा । स यावदयमागमप्रधानोऽनुमानप्रधानो वा स्यात्–न तावदियं प्रामाण्याप्रामाण्यविसंवादधारा शक्या निवर्तयितुम् । यावद्वा निवर्तयितुं प्रयत्स्यते, तावदेवेयमतितरां क्षुब्धा सती भूय एव समधिकं प्रवर्द्धते । तस्माद् व्यर्थस्तर्केण वचनेन च तन्निवर्तनप्रयासः ।

अथायं प्रत्यक्षप्रधानस्तु न्यायो निर्मूलं शक्नोति निवर्तयितुं विसंवादचक्रम् । "एतद्वै मनुष्येषु सत्यं निहितं यच्चक्षुः" इति श्रुतेः प्रत्यक्षस्य सत्यप्रतिष्ठापकत्वात् । सत्यप्रतिष्ठायां च सत्यां विपरीततर्कानुत्थानान्निभृतं तत्रैवार्थे श्रद्धातिशयो जायत इति न शक्यमवस्थातुं विसंवादेनेति सूक्ष्मेक्षिकया समीक्ष्यम् । अथ यत्रार्थे न प्रत्यक्षकरणयोग्यता दृश्यते, तत्रापि तदर्थवक्तुः प्रतिपादितेष्वन्येषु केषुचित्प्रत्यक्षयोग्येषु विषयेषु फलप्रत्यक्षाय प्रयतनीयम् । तथा च सति भूयसा तदर्थश्रद्धानात्तद्वक्तरि श्रद्धा सुतरां संपत्स्यत इति तदुक्तेष्वन्येष्वपि प्रत्यायोग्येषु विश्वासः साधीयानुपलप्स्यते । नातोऽन्या गतिः संभवति काचिदिह प्रामाण्यनिष्पत्त्यै, तस्मादिह वस्तुयाथात्म्यनिबन्धनं प्रामाण्यं फलप्रत्यक्षकरणमापेक्षमिति निष्कर्षः ।

तदित्थमेतन्नयायाङ्गतया त्रिविधानि प्रमाणान्युक्तानिप्रत्यक्षमनुमानमागमश्चेति, तेषां च मुख्यगौणभेदात्प्रत्येकं द्वैविध्यमप्युपदर्शितम् अनुभवविशेषा मुख्यानि, तदौपधिकार्थविशेषास्तु गौणा-

नीति । तत्रेदमिदानीं विशेषलक्ष्यं किञ्चिद्वाचक्ष्महे–न प्रत्यक्षादयोऽनुभवा इन्द्रियलिङ्गशब्दान् विना कृत्वा प्रामाण्याय क्वचिद् दृष्टाः । न चानुभवान् विना कृत्वामीषामिन्द्रियादीनां प्रामाण्यं क्वचिदुपलभ्यते । तस्माद्विज्ञानविशिष्टमिन्द्रियं वा, इन्द्रियविशिष्टं विज्ञानं वा विप्रमुग्धकार्यकारणभेदमेकं प्रमाणं संपद्यते । एवं शब्द शब्दानुभवौ सहगृहीतौ शास्त्रम्, न शब्दस्यानुभवस्य वा पार्थक्येन शास्त्रत्वं व्यवहरन्ति लोके । शास्त्रं च प्रमाणम्, तस्माद्विप्रमुग्धभेदं तदेकं प्रमाणम् । दृष्टं प्रत्यक्षमन्वक्षं समक्षमुपाख्यं साक्षात्करणमित्यनर्थान्तराणि । आगमस्तन्त्रं शास्त्रं शब्दो वेद इत्यनर्थान्तराणि । अत्र शब्द शब्दः शब्दशाब्दयोरविशिष्टः शास्त्रापरपर्यायो भिन्न एव, 'आप्तोपदेशः शब्दः' शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इत्येवमादिषु सूत्रजातेषु शास्त्रतात्पर्येणैव भूयसा शब्दशब्दप्रयोगात् । शास्त्रमिति वेद इति चानन्यार्थौ, 'शास्त्रसामर्थ्याच्चे इत्यादिषु वेदतात्पर्येणैव शास्त्रपदप्रयोगात् । 'आयुर्वेदः शाखा, विद्या, सूत्रम्, ज्ञानम्, शास्त्रम्, लक्षणम्, तन्त्रमित्यनर्थान्तरम्' इति चरके ( सूत्र ३० अ० ) पतञ्जलिना वेदशास्त्रयोः पर्यायवाचित्वेनाम्नानाच्च । अत्रायुरिति शाखादीनां विशेषपरत्वाभिधानाय सर्वशेषवचनम् अन्यथा शाखादिशब्दानामायुर्वेदमात्रपरत्वमपदार्थः प्रसज्जेत । तथा च वेदः शास्त्रं शब्द इत्येवमादयः शब्दाः स्तृतीयप्रमाणाभिप्राया एकार्था–इत्यर्थः सिद्धः । अतएव—

"प्रत्यक्षानुमानशब्दाः प्रमाणानि" । [ गौतमः ]

प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता । [ मनुः ] ।
प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदात [ स्मृतिः ] ।

इत्यादीनि स्मृतिवचनानि समञ्जसानि भवन्ति । 'ऋषिवचनं वेदः' इति सुश्रुतोक्तमपि ( सु० ४० अ० ) न शब्दमात्रस्य वेदत्वमाख्यापयति । वचनशब्दस्य शब्दार्थयोरविशिष्टत्वात् । तस्माद्विज्ञानशब्दैतदुभयसंप्रमुग्धसमष्ट्यात्कोऽयं वेदो न विज्ञानमात्रं न वा शब्दमात्रमिति दिक् ।

परे त्वेवं पश्यन्ति शब्दैकदेशस्य प्रमाणैकदेशस्य विज्ञानैकदेशस्य चेदानीं यावद् वेदत्वमाख्यातम्, तन्नावकल्पते । सर्वविधानामेव शब्दानां सर्वविधानां प्रमाणानां सर्वविधानां वा विज्ञानानां

वेदत्वेनाभ्युपगन्तुं युक्तत्वात्। तथा हि शब्दं तावद व्याख्यास्यामः, नित्यसदर्थमाप्तं वाक्यं वा सदर्थमाप्तं वाक्यं वा नित्यासदर्थमाप्तं वाक्यं वा स्याद्, अथवा द्रष्टुर्वाक्यं वा श्रोतुर्वाक्य वा वा प्रमादतो वाक्यं वा स्याद्, यः कश्चन शब्दः स्यात्सर्वथापि तु शब्दो नाम न जातुचिदप्रमाणं भवितुमर्हति। वह्निना सिञ्चती' त्यादौ यत्रापि योग्यताग्रहो नास्ति, शुकभाषितादौ यत्रापि तात्पर्यग्रहो नास्ति, तत्राप्यविशेषं या वच्छक्यं तावदर्थप्रत्यायने शब्दानां कृत कृत्यत्वात्। यदि नाम तत्र शब्दो नार्थं प्रत्याययेत् तर्हि तदर्थे योग्यताबाधग्रहोऽपि कथं नामोपतिष्ठेत, न हि वह्निना सिञ्चतीत्येतद्वाक्यार्थानवगमे योग्यता सत्त्वासत्त्वसमीक्षा प्रभवति तत्र प्रवर्तितुं जातु। न चैतत्पदार्थोपस्थितिमात्रम्, योग्यताबाधस्य वाक्यार्थे गृहीते तु वाक्यार्थे तावतैव कृतकृत्यः शब्दो न पुनः स्वार्थग्रहणाय विनियुज्यते, 'शब्दबुद्धिकर्मणां विरम्य व्यापारालाभात्'। तस्मात्तत्रापि शब्दः स्वार्थं प्रत्याययन् प्रमाणं भवितुमर्हति। यत्तु शब्देन यादृशोऽर्थः प्रत्याय्यते, ततो विरुद्धः प्रत्यक्षादिना प्रमाणान्तरेण तत्रार्थो गम्यते। अत एतत्प्रत्यक्षादिविसंवादात्तत्रास्य शब्दस्य प्रामाण्यमपोद्यते, शब्दप्रमाणापेक्षया प्रत्यक्षप्रमाणप्राबल्यात्। विप्रतिषेधेऽपूर्वप्रमाणापेक्षया परप्रमाणप्राबल्याच्च। दृश्यते हि भ्रमस्थले शुक्तिकाप्रत्यायकोत्तरप्रत्यक्षेण निर्दोषेण सदोषस्य रजतप्रत्यायकस्य पूर्वप्रत्यक्षस्य प्रामाण्यापवाद इति। एतच्च प्रमाणयोः प्राबल्यदौर्बल्यं सार्वजनीनप्रत्ययसिद्धमित्यनपलप्यं भवति। तस्मात्प्रत्यक्षविरुद्धः शब्दोऽप्रमाणमित्याहुः। तदेतद्बालबुद्धिमात्रम्, शब्दव्यापारानन्तरं हि तत्र प्रत्यक्षादिव्यापारः प्रवर्तते, ततश्च बाधग्रहो भवति, ततः शब्दे प्रामाण्यापवादः क्रियते, प्रामाण्यापवादश्च प्रमां न जनयतीति प्रतिपत्तिः। इयं च न प्रत्यक्षादिव्यापारात्प्रागासीत्, आसीच्च तदाप्रमां जनयतीति प्रतिपत्तिः। तत्रैव भवतः प्रतिपत्त्योरेव तु बाध्यबाधकभावः फलत सिद्धो भवति, कालभेदेन प्रतिपत्त्योरेव द्वैविध्यात्। न तु तस्याः प्रमाजनकतायाः शब्दविष्ठायाः, शब्दे कालभेदेन व्यापारद्वयाभावात्। यदा पुनरासीच्छब्दे प्रमाजननव्यापारो न तदा प्रत्यक्षादिविसंवादाधीना प्रतिपत्तता स्थानमलभतेति कः शब्दस्य प्रमाजनन व्यापारमवरुन्ध्यात्? अनवरोधाच्च कृते शब्देन स्वीये निसर्गसिद्धे प्रमाजननव्यापारे यदि पश्चात् परः सहस्रैरपि वचनभारैः कश्चिद्ब्रूयाद् 'नानेन प्रमा जनिता, नानेन प्रमाजनितेति' किमनेन कृतं स्यात्? यथा हि 'नत्र घटोऽस्ति' 'जलेन वृक्षं सिञ्चती'त्यादिरूपं दृष्टराप्तं वाक्यं यथाविधेन व्यापारेण तत्र स्वार्थं प्रत्याययितुं प्रवर्तते, निर्विशेषमिदं 'वह्निना सिञ्चती' त्यादिकमनाप्तं विक्षिप्तवाक्यमपि नूनं तथैव प्रवर्तत इति किं निबन्धनमस्याप्रामाण्यं वक्तुं युज्ये-

तेति विमृश्यताम् । यत्तु कश्चिद् ब्रूयात्—शब्दो नामायं स्वविषय भूतस्यार्थस्य सत्तया योगं प्रत्याययति, न च तत्र सत्तया योगमुपलभामहे, ततोऽसन्तमर्थं प्रत्याययतीति प्रतिपद्यामहे, ततोऽतस्मिंस्तद्बुद्धिं प्रयोजयन् शब्दोऽप्रमाणमस्तीति विज्ञापयाम् इति । तदप्यविचारितरमणीयमेव । सत्तायोगाभावोपलब्धेः प्रमाणान्तरसाध्यायाः प्रतिबन्दित्वस्यानुपदमेव निरस्तत्वात् ॥ १ ॥

किञ्च—प्रत्यक्षमेवेदं प्रमाणं स्वविषयभूतस्यार्थस्य सत्तया योगं प्रत्याययितुं प्रवर्तते, न शब्दोऽपि । शब्दस्तुनामभूतं भवन्तं भविष्यन्तं, सन्तमसन्तं संनिकृष्टं विप्रकृष्टं, चक्षुरादिविषयीकृतं व्यवहितं च सर्वविधमेवामार्थविशेषादैकरूप्येण प्रत्याययितुं कृतव्यापारो भवतीति कथं नामासन्तमर्थं प्रत्यायन्नप्रमाणे भवितुमर्हति ॥ २ ॥

किंच 'भारतवर्षे सुमेरुपर्वतोऽस्ति' इत्येवं प्रयुज्यमानः शब्दः सत्ताविशिष्टस्य मेरोर्भारतवर्षेण सम्बन्धं प्रतिपादयितुं विनियुक्तो दृश्यते, स न तस्मात्स्वार्थात्प्रच्यवते, नाप्यधिकं करोति। अत एवास्य मेरोर्यद्यापि न वर्तते भारतवर्षेण सम्बन्धस्तथाऽपि नायं शब्दोऽपराध्यति । भारतवर्षेण मेरोः सम्बन्धकरणे तस्य विनियोगायोगात् । भिद्यते तु सम्बन्धकरणं च सम्बन्धबोधनं च । तत्र बोधने तावद् । विनियुक्तः शब्दः कृतमकृतं वा सम्बन्धं कृतत्वेनापि शक्नोत्येव बोधयितुम् । स तथा बोधयन् शब्दः स्वार्थादनपेतो न शक्यमप्रमाणी कर्तुम् । तस्मादसन्तमप्यर्थं बोधयन् शब्दःप्रमाणमेवेति शक्यमप्रतिपक्षं समर्थयितुम् ॥ ३ ॥

किं च यथा कामलादिदोषसंयोगात्पीतशङ्ख प्रत्यायकस्यापि चक्षुषः पीतत्वांशमात्रे प्रामाण्यमपोद्यते, न सर्वथैतदप्रमाणमेव चक्षुरिति विश्वासः साधीयान् । एकेनैव व्यापारेण जनितस्यैकस्यविशिष्ट प्रत्ययस्य सर्वथैवाप्रामाण्येऽभ्युपगम्यमाने शङ्खाद्यंशेऽपि प्रमाया अप्रमात्वापत्तेः, न चेष्टापत्तिः प्रतीतिविरोधात्, एवममुष्य शब्दस्यानाप्तोच्चरितत्वरूपदोषसंयोगादतथा भूतार्थप्रत्यायकत्वेऽपि कस्मिंश्चिद्विशेषणांशमात्रे प्रामाण्यमपोद्यते, न तु सर्वथैतद्प्रमाणमेवानाप्तवाक्यमिति विश्वासः साधीयान् । एकस्माद्वाक्यादेकदा प्रयुक्तादेकेनैव व्यापारेण जनितस्यैकस्य विशिष्टप्रत्ययस्य सर्वथैवाप्रामाण्येऽभ्युपगम्यमाने संभवदर्थांशतोऽपि प्रमाया अप्रमात्वापत्तेः, न चेष्टापत्तिः, प्रतीतिविरोधात् । तस्मादेवमंशाप्रामाण्येऽपि विशिष्ट प्रत्ययस्य प्रमात्वं न व्याहन्यते–इति सर्वविधः शब्दः प्रमाणमेवोपपद्यते ॥ ४ ॥

किं च पीतशङ्खप्रत्यये नेदं पीतत्वं नितान्तमविषयम्, प्रत्यायके चक्षुषि तेजसि पित्तसंयोगात्तद्गोचरे पीतगुणोपलम्भस्य वास्तविकत्वात्। नापि वा तत्र पीतगुणस्य शङ्खेन सम्बन्धः प्रत्यायितोऽसदर्थः, पीतगुणकेन तेन तेजसा संबद्धे तस्मिन् शङ्खेऽवश्यमस्य पीतगुणस्योपसंक्रमणात्, तस्मात् सर्वथा पीतशङ्खप्रत्यायनमपीद चक्षुः प्रमाणमेव न त्वंशतोऽपीदमप्रमाणं भवितुमर्हति। प्रत्युत यदि पित्तसंयुक्तं चक्षुरपीतं शङ्खं प्रत्याययेत् तदानीमेवेदमप्रमाणं स्यात्। सतस्तत्र दोषकार्यस्य पीतत्वादेरनवबोधात्। पीतं तु शङ्खं प्रत्याययदिदं भवत्येव पित्तविकारप्रत्ययहेतुत्वादविकलं प्रमाणम्। यदि तु तस्य प्रामाण्यमेवापो-ह्येत तर्हि दोषज्ञानं संशयविपर्ययादिविशेषज्ञानं वा सर्वथैवापलपितं स्यात्, प्रमाणाभावादिति लोकव्यवहारोच्छेदप्रसङ्गः। तस्मात्सर्वं प्रत्यक्षं प्रमाणमेव, किन्तु नैवंविधेन प्रत्ययेन लोकव्यव-हारः प्रवर्तनीयो दोषसमुचितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमव्यभिचारि प्रत्यक्षंप्रमाणं भवतीति विशेषणेन भगवाननुजग्राह। एवमेवायं मे पुत्र इत्यपुत्रेपुत्रत्वं विदधद्वञ्चकवाक्यं न नितान्तमवि-षयं भवति "यन्मनसा मनुते तद्वाचा वदति" इति श्रुतेः प्रत्यायके शब्देऽपुत्रारोपितपुत्रत्वबुद्धि-संयोगात् तद्गोचरे पुत्रत्वबुद्धेर्वास्तविकत्वात्। यद्यसौ तत्र पुत्रत्वमभावयमानो ब्रूयात् नैव तर्हि स तथा वाक्यं वक्तुमपि शक्नुयात्। अथैवं भावितस्यापि पुत्रत्वस्य तेनापुत्रेण संबन्धः प्रत्यायितो-ऽसदर्थः स्यादित्यपि न भ्रमितव्यम्, पुत्रत्वारोपबुद्ध्या गृहीते व्यक्तिविशेषे प्रत्याय्यमानस्यैतस्य सम्बन्ध स्यावश्योपगन्तव्यत्वात्। तस्मात् पुत्रत्वगुणकप्रत्यायकमिदं वाक्यं प्रमाणमेव न त्वंशतो-ऽप्यप्रमाणं भवितुमर्हति, प्रत्युत यद्यारोपबुद्धिसंयुक्तं वाक्यमनारोपितपुत्रत्वं व्यक्तिविशेषं प्रत्याययेत् तदानीमेवेदमप्रमाणं स्यात्, सतस्तत्रारोपकार्यस्य पुत्रत्वादेरनवबोधनात्। आरोपितपुत्रत्ववन्तं तु प्रत्याययदिदं भवत्येवारोपप्रत्ययहेतुत्वादविकलं प्रमाणम्। यदि तु तस्य प्रामाण्यमेवापोह्येत, तर्हि वञ्चकत्वज्ञानमविज्ञत्व ज्ञानं वा सर्वथैवापलपितं स्यात् प्रमाणाभावादिति लोकव्यवहारोच्छेद-प्रसङ्गः। तस्मात्सर्वः शब्दः प्रमाणमेव, किन्तु नैवंविधेन प्रत्ययेन लोकव्यवहारः प्रवर्तनीयो दोष-समुचितत्वादित्येवमर्थं प्रतिपादयितुमिवेदमाप्तवाक्यं शब्दः प्रमाण भवतीति विशेषणेन भगवाननुज-ग्राह। इत्थं च सति शब्दानाम प्रामाण्यकारणं नोपलभामहे, ततः सर्वविधः शब्दः प्रमाणमे-वेति प्रतिपद्यामहे ॥ ५ ॥

अथवेदमन्यथान्यथा निरूपयितुं पारयामः। अयं मे पुत्रइत्येकमेवेदं वाक्यं पुत्रे पुत्रज्ञानं विदधत् क्वचिदपुत्रेऽपि पुत्रज्ञानं विधत्ते—तत्रैतस्यैकस्यान्यत्र प्रामाण्यमेकत्राप्रामाण्यमिति

द्वैविध्यं नोपपद्यते –प्रमाणस्याप्रमाणत्वासंभवात् । अथवा यत्र क्वचिदस्य प्रामाण्यमनुपगम्यते तात्रतैव तु पर्याप्तं प्रामाण्यमेतस्य शब्दस्य प्रतिपत्त ं पारयामः । न वयंब्रूमो यत् प्रमाणं सर्वत्र प्रमाणं तदेव प्रमाणं स्यादिति, अपि तु यदेकत्रापि क्वचित् प्रमाणं तदपि प्रमाणं शक्यं व्यपदेष्टुमिति पश्यामः । अथवा सर्वश्च शब्दः स्वविषये स्वतः प्रमाणम्, अप्रामाण्यन्तु तस्य परतः प्रतिपद्यते । अयं मे पुत्र इति हि वाक्यं सर्वत्रैव पुत्रे पुत्रज्ञानं जनयत् प्रमाणं भवितुमर्हति, तदेवेदमनाप्तो यद्यपुत्रे प्रयुञ्जीत सोऽयं प्रयोक्तुः प्रयोगदोषो भवति न शब्ददोषः अस्ति यदि पुत्रे प्रयुक्तः अस्ति वा यद्यपुत्रे प्रयुक्तः सर्वत्रायं शब्दः पुनरेकरूपेणार्थमभिधत्ते, तस्मादयं सर्वविध एव शब्दः स्वतः प्रमाणमिति मन्यामहे ॥ ६ ॥

यत्तु कश्चिद् ब्रूयात्—सर्वविधानामेव शब्दानामविशेषेण प्रामाण्यऽभ्युपगम्युमाने लोकविरोधः प्रसज्जते । लोके तावदनृतव्याघातपुनरुक्तदोषवत्सु शब्देषु श्रूयमाणेष्वपि न प्रेक्षापूर्णकारिणः प्रवृत्तिर्दृश्यते । तस्मादप्रामाण्यमेवंविधानां शब्दानां तर्कयाम इति । तत्तुच्छम् । शब्दप्रमाणोपजनितशब्दाप्रमानन्तरं ततः प्रागेव वा प्रमाणान्तरगृहीतानामनृतादिदोषाणां लोकप्रवृत्तिं प्रति प्रतिबन्धकत्वे संभवत्यपि शब्दप्रामाण्य प्रतिबन्धकतायास्तत्रासंभवदुक्तिकत्वात्, कार्योत्पत्तेः प्रागेव हि सर्वत्र प्रतिबन्धकसामग्र्या व्यापारो लभ्यते न कार्योत्पत्तेरुत्तरमापि तेनार्थः । इह तु जनितायां शाब्द्यां प्रमायामुत्तरतोयं गृहीतो दोषः समुपतिष्ठते प्रतिबन्धनाय । स च शाब्दप्रमोत्तरभाविन्यां प्रवृत्तावेव प्रभवेद् व्यापारं लब्धुं न पूर्वसिद्धायां तस्यां शाब्द्यां प्रमायामपीति निपुणं भाव्यम् ॥ ७ ॥

अथवा द्विविधं तावच्छब्दानां प्रामाण्यं भवति । अर्थागतं पारमार्थिकमेकम्, तच्च शब्दानां स्वतः सिद्धं, गृहीतसमयानां तत्र नित्यं च । अथ फलागतं व्यावहारिक मन्यत् तच्च शब्दानां व्यवहारानुरोधात् प्रकल्पितमेवेत्यत एव क्वचित्परतः प्रामाण्यं क्वचिद्वा परतोऽप्रामाण्यमित्युभयथा लोके दृश्यते । तदेतदन्यत्र प्रपञ्चितम् । तथा क्वचिदनृतादिदोषसमवधानेफलागतगौण प्रामाण्याभावेस्वीक्रियमाणेपि न त्वेव तावता शब्दानां स्वतः सिद्धं पारमार्थिकं मुख्यं प्रामाण्यं शक्यं निराकर्तुम् । यथा प्रदीपस्य सुप्रज्वलितस्य स्वतः सिद्धोऽयं नित्यप्रकाशनव्यापारोघटाद्यावरणान्न बहिर्लोके फलोपधायको भवति, न तथापि तस्यार्थागतं वास्तविकं प्रकाशकत्वमेवकेनचिच्छक्यमपवदितुम् । सर्वत्रैकरूपेण तस्य प्रवर्तमानत्वात् । अत एवामुष्मिन् शब्देपि

न्यायो द्रष्टव्यः । फलोपधानप्रतिबन्धकसामग्रीसमवधानेपि शब्दव्यापारस्यानवरुद्धत्वात् । तस्मात् सर्वविध एव शब्दः प्रमाणमेवेति संसिद्धम् । तदित्थमविकलं निराकृतं योग्यताबाधस्थानीयं शब्दाप्रामाण्यम् ॥ ८ ॥

अथ तात्पर्यग्रहाभावस्थानीयं शब्दाप्रामाण्यमप्येवमेव निराकृतं वेदितव्यम् । तथाहि शुकभाषितादौ वक्तृगतायाबुबोधयिषाया अभावो गृह्यमाणः प्रवृत्तिमेव लोकानां प्रतिबध्नाति न शब्दानां प्रमाजनकत्वमपि । शब्दस्तु खलु तद्याप्तभाषितः स्याच्छुकभाषितो वा सर्वत्रैकरूपेण व्यापारं कुर्वन् दृश्यते । तस्यैकत्र प्रामाण्यमन्यत्राप्रामाण्यमिति वैषम्याभ्युपगमो न्यायादपेतः स्यात् । तस्मात्तत्रापि प्रामाण्यमेव हस्तलब्धं भवतीत्यवधेयम् ।

अयंग्रन्थः एतावाने लभ्यते । अतः परमपि क्रोड़पत्राण्यासन् परन्तानि व्यपगतानीति सखेदं निवेद्य विरमामः ।



॥ श्री ॥

—वेदधर्मव्याख्यानम्—

# ❀ तृतीय भागस्य शुद्धिपत्रम् ❀

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १ | ३ | तात्त्विकमर्थ | तात्त्विकमर्थं |
| ,, | ५ | मुनयच्च | मुनयश्च |
| ,, | ६ | बुद्धय | बुद्ध्य |
| २ | ८ | जगत्तस्वं | जगत्तत्वं |
| ३ | २२ | नाभ | नाम |
| ,, | २२ | यथायय | यथायथ |
| ४ | २ | वक्त | वक्तृ |
| ,, | ३ | साहस्त्रीं | साहस्त्रीं |
| ,, | १६ | स्वाथतात्पय | स्वार्थतात्पर्य |
| ,, | ,, | व | वा |
| ,, | ,, | वश्य | वंश्य |
| ५ | २ | दुख | दुःख |
| ५ | ५ | स्थाव येषान्तु | स्यात् येषान्तु |
| ,, | १० | एतिहासिकल्पित | ऐतिहासिककल्पित |
| ,, | १४ | खिन्नाय | खिन्नायां |
| ,, | ,, | मुक्खिद | मुदक्खिद |
| ,, | २० | मुदाक्खिद | मुदक्खिद |
| ,, | ,, | वीरुद्धा | वीरुद्धा |
| ,, | २३ | पदाथ | पदार्थ |
| ,, | ,, | दर्शनर्थ | दर्शनार्थ |
| ६ | ७ | सिज्ञासमानस्य | जिज्ञासमानस्य |
| ,, | ८ | श्रय | अयं |
| ,, | १६ | दुख | दुःख |
| ,, | ,, | मुक्तै महर्षिभि | मुक्तै महर्षिभि |
| ,, | २२ | यद्यु न | यद्यनु |
| ,, | २३ | विधाना | विधानां |
| ७ | २ | कथाञ्चिद् | कथञ्चिद् |
| ,, | ३ | चातिरिच्येन् | चातिरिच्येरन् |
| ,, | ४ | माक्कू रोदारोह | माक्कू रोदारोह |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ७ | ६ | दशयितव्या | दर्शयितव्या |
| ,, | १५ | संभवात | संभवति |
| ,, | १८ | मैथुकनादयो | मैथुनादयो |
| ,, | १६ | रसासुङ्मांसभेदो | रसासृङ्मांसभेद |
| ,, | ,, | इन्द्रसोभाग्न्या | इन्द्रसोमाग्न्या |
| ,, | २२ | समूढ | समूहस्य |
| ,, | ,, | ब्रह्मण्ड | ब्रह्माण्ड |
| ,, | २५ | विदाङ्कुर्वु न्तु | विदाङ्कुर्वन्तु |
| ८ | १० | धिष्ठतानां | धिष्ठितानां |
| ,, | २३ | कल्पनति | कल्पनेति |
| ,, | २४ | ब्राह्मणा | ब्रह्मणा |
| ९ | ४ | लभ्य | लभ्या |
| ,, | ८ | समथन | समर्थन |
| ,, | ,, | तत्सभ्यग | सम्यग |
| ,, | ६ | स्वर्शि | स्पर्शि |
| ,, | १३ | यदिस्मिन्न | यदस्मिन्न |
| ,, | १४ | इश्वरेच्छा | ईश्वरेच्छा |
| ,, | १५ | तथैव तथैव | तथैव |
| ,, | १७ | केनाचित्पुरुषेण | केनचित्पुरुषेण |
| ,, | २१ | तपस्याभानान् | तपस्यमानान् |
| १० | हैडिंग | पुराणसमीक्ष | पुराणसमीक्षा |
| १० | १ | चवमाद्याः | चैवमाद्याः |
| ,, | ४ | सेतिहस्सान् | सेतिहासान् |
| ,, | ५ | लेभिरै | लेभिरे |
| ,, | ६ | गर्भयन्ति | गमयन्ति |
| ,, | १० | गतनां | गतानां |
| ,, | १२ | ममष्टयत्मकान | समष्टयात्मकान |
| ,, | ,, | भावादयिंतु | मापादयितुं |
| ,, | १४ | कृतकत्ववादः | मकृतकत्ववादः |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ६ | १४ | भिमु | भिमुं |
| १० | १६ | स्पष्ट | स्पष्टं |
| ,, | २४ | मप्यक्षमाणा | मप्यक्षममाणा |
| ,, | २५ | सुवर्णादिवश्यं | सुवर्णादिवदवश्यं |
| ११ | ६ | हवियज्ञ | हविर्यज्ञ |
| ,, | ,, | तयेव | तयैव |
| ,, | ११ | ब्रह्मणे | ब्राह्मणे |
| ,, | ,, | कवया | कवयः |
| ,, | १३ | शुश्रवान | शुश्रुवान् |
| ,, | १५ | सिद्धान्त | सिद्धान्तो |
| ,, | १८ | दृष्टार्थविषय | दृष्टार्थविषय |
| ,, | २५ | प्रोक्तम | प्रोक्तम् |
| १२ | १ | ग्रहणार्थ | ग्रहणार्थं |
| ,, | ५ | सप्रादु: | संप्रादु : |
| ,, | ,, | सिपुवदं | सिपुर्वेदं |
| ,, | ६ | दशितास्त्रयो | दर्शितास्त्रयो |
| ,, | १० | देवेमत्यल्प | देवमत्यल्प |
| ,, | ,, | पारंगामिवता | पारंगमिता |
| ,, | १३ | प्रवाद: | प्रवादा |
| ,, | ,, | प्रयर्तन्ते | प्रवर्तन्ते |
| ,, | ,, | यथाकथाचित् | यथाकथांचित् |
| ,, | १४ | प्रागलभ्यं | प्रागल्भ्यं |
| ,, | १७ | मवन्तो | भवन्तो |
| ,, | १६ | सितत्व | सितत्वं |
| ,, | ,, | कृतत्व | कृतत्वं |
| ,, | ,, | भूतत्व | भूतत्वं |
| १२ | १६ | मृग्वङ्गि | भृग्वङ्गि |
| ,, | ,, | महर्षिकृतत्वं | महर्षिकृतत्वं |
| ,, | २० | दशिनां | दर्शिनां |
| ,, | २१ | धिरादौ | भिरादौ |
| ,, | २४ | दर्शादितु | दर्शयितु |
| १३ | ३ | प्यारिस्पृष्टा | प्यस्पृष्टा |
| ,, | ४ | वित्ति: | विच्छित्ति: |
| ,, | १० | एवायमर्था | एवायमर्थ |
| ,, | १६ | निपित | निपीत |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १४ | ३ | दृष्यते | दृश्यते |
| १४ | ६ | मासते | भासते |
| ,, | २१ | विषयादीन्यन्त | विषयादीन्यन्त: |
| १५ | ३ | वा ते, | वा, ते |
| ,, | १८ | कथमिद | कथमिदं |
| ,, | २० | ग्रहाण | गृहाण |
| ,, | २१ | फलित | फलितं |
| ,, | २२ | विषयाप्राव | विषयाणामव |
| ,, | ,, | श्र यते | श्रूयते |
| १६ | ११ | पाख्यग्यु जः | पाख्यग्यजु: |
| ,, | ,, | ऋग्येजु: | ऋग्यजु: |
| ,, | १२ | पाख्यग्यु जः | पाख्यर्ग्येजु: |
| ,, | १३ | त्रीणिमानि | त्रीणीमानि |
| १६ | २२ | भबति | भवति |
| ,, | २५ | वबस्था | ववस्था |
| ,, | ,, | मृतकाया | मृत्काया |
| १७ | २ | मुक्तो | युक्तो |
| ,, | ७ | सर्वामिद | सर्वमिद् |
| ,, | १० | वर्तमानवत | वर्तमानवत् |
| ,, | ११ | विवत | विवर्त |
| ,, | १३ | केषांचद | केषांचिद् |
| ,, | ,, | बुद्धे रूदयत | बुद्धे रुदयत्त |
| ,, | १४ | निवतते | निवर्तते |
| ,, | १५ | तदैवं | तदेवं |
| ,, | २२ | जनयत्व | जनयत्वं |
| ,, | २३ | भिद्यन्ते | भिद्यते |
| ,, | २४ | दृष्टयैव | दृष्ट्यैव |
| १८ | २ | त्रिशत: | त्रिंशत: |
| ,, | ४ | तावं | तावन् |
| ,, | ,, | नितराभासेत | नितरामाभासते |
| ,, | १० | विद्यये | विद्येय |
| ,, | १२ | विरूद्धो | विरुद्धो |
| ,, | १६ | धनन्तो | घनन्तो |
| ,, | १७ | महापुरूष | महापुरुष |
| ,, | १८ | नियत्न | नित्ययत्न |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| १८ | ,, | पौरूषेयत्वे | पौरुषेयत्वे |
| ,, | २० | पौरूपेयत्वं | पौरुषेयत्व |
| ,, | २१ | पौरूषेयत्व | पौरुषेयत्व |
| ,, | २२ | प्रोमपौरूषेय | मपौरुषेय |
| १९ | ४ | विशिष्ट | विशिष्टं |
| ,, | ७ | सर्वशब्दा | सर्वेशब्दा |
| ,, | १० | सस्कारा | संस्कारा |
| ,, | १४ | सर्वावेद | सर्वोवेद |
| ,, | १६ | परिव्यापि | परिव्यापी |
| ,, | २४ | समोक्षितम् | समीक्षितम् |
| २० | ४ | प्राणाविषयं | प्राणविषयं |
| ,, | १० | सवमृक् | सर्वमृक् |
| ,, | १६ | किंश्चित | किञ्चित् |
| ,, | १७ | पृथ्वी | पृथ्वी |
| ,, | १८ | मुक्तत्वात् | मुक्तत्वात् |
| ,, | २० | मुक्तत्वात् | मुक्तवात् |
| ,, | २५ | द्यस्थानं | द्यु स्थानं |
| २१ | ३ | ज तानांम | जातानाम |
| ,, | ६ | प्रतिपन्नामेकत्र | प्रतिपन्नानामेकत्र |
| ,, | ९ | होतारं होतारं | होतारं |
| ,, | १० | प्रवतते | प्रवर्तते |
| ,, | १३ | प्रवृत्तेऽयं | प्रवृत्तोऽयं |
| ,, | १५ | तिहोता | निहोता |
| ,, | १६ | स्यात | स्यात् |
| ,, | ,, | प्रवृतो | प्रवृत्तो |
| ,, | २१ | द्विविघा | द्विविधा |
| ,, | २२ | ब्रह्माण्डाभि: | ब्रह्माण्डाभि: |
| ,, | २३ | यस्यैतेंऽशाः | यस्यैतेंऽशाः |
| २२ | ४ | द्य स्थाने | द्यु स्थाने |
| ,, | १२ | दाधार | दधार |
| ,, | १५ | द्य लोक | द्यु लोक |
| ,, | २१ | द्य स्थानां | द्यु स्थानां |
| २३ | १ | त्रिविध | त्रिविध |
| ,, | ,, | प्रमाण | प्रमाणं |
| ,, | ६ | स्पष्ट | स्पष्टं |
| २३ | १९ | काश्चित् | कश्चित् |
| ,, | २३ | वाङ्मय | वाङ्मय |
| २४ | १ | वाङ्मय | वाङ्मय |
| ,, | ३ | भृण्मये | मृण्मये |
| ,, | ,, | प्रपञ्चे: | प्रपञ्चे |
| ,, | ,, | उपचार | उपचार: |
| ,, | ४ | द्वविध्यं | द्वै विध्यं |
| ,, | ,, | वनपवत | वनपर्वत |
| ,, | ६ | पक्लृतिपि | पक्लृप्तिरपि |
| ,, | ७ | इश्वरेच्छा | ईश्वरेच्छा |
| ,, | ९ | सश्लिष्य | संश्लिष्य |
| ,, | १६ | नस्तदिविनाशं | तस्तदविनाशं |
| ,, | १९ | भूतजात्पत्ते: | भूतजोत्पत्ते: |
| ,, | २२ | सयोगेऽपि | संयोगेऽपि |
| २५ | १ | सम्भवन्नापि | सम्भवन्नपि |
| ,, | २ | बुद्धिक्षेत्र | बुद्धिक्षेत्रे |
| ,, | ४ | स्वाभावात् | स्वभवात् |
| ,, | १० | तान्या । | तान्या- |
| ,, | १५ | प्रादुर्भवन्नप्यय | प्रादुर्भवन्नप्ययं |
| ,, | २४ | प्रथम | प्रथमं |
| २६ | ३ | बुद्धि | बुद्धिं |
| ,, | ४ | श्रतौ | श्रुतौ |
| ,, | ८ | इनि | इति |
| ,, | १० | दशन | दर्शन |
| ,, | १९ | सत्यभेव | सत्यमेव |
| ,, | २० | ब्रते | ब्रूते |
| ,, | २२ | वाक्यजात | वाक्यजातं |
| ,, | २३ | मत्युच्यते | मित्युच्यते |
| २७ | ११ | ग्रहणत् | ग्रहणात् |
| ,, | १३ | तत्रिबन्धन | तन्निबन्धन |
| ,, | १४ | तदित्थ | तदित्थं |
| ,, | १८ | वक्तराप्तत्वं | वक्तुराप्तत्वं |
| ,, | २० | वतुत्पद्यते | वुत्पद्यते |
| ,, | २१ | तदित्थ | तदित्थं |
| ,, | ,, | चाप्रामाण्य | चाप्रामाण्यं |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २८ | ६ | विज्ञानानिबन्धनो | विज्ञाननिबन्धनो |
| ,, | ७ | परस्मे | परस्मै |
| ,, | ,, | त्तापयितु | ज्ञापयितुं |
| ,, | ,, | प्रयुङे क्त | प्रयुङ्क्ते |
| ,, | ६ | शब्द | शब्दं |
| ,, | ११ | कुरूते | कुरुते |
| ,, | १२ | वाकूयोग | वाक् प्रयोगः |
| ,, | १७ | सन्धि | सन्धिः |
| ,, | ,, | एक | एकः |
| ,, | १८ | नानारीयक | नान्तरीयक |
| ,, | २० | एवाज्ञावाप्ते षु | एवासावाप्ते षु |
| ,, | २४ | यदिद | यदिदं |
| ,, | २५ | द्रष्ट | द्रष्टृ |
| २६ | १ | एवंमिद | एवमिद |
| ,, | ३ | श्रतिः, | श्रुतिः, |
| ,, | ४ | श्रतिरेकान्ततः | श्रुतिरेकान्ततः |
| ,, | ४ | प्रत्ययानाश्र | प्रत्ययनाश्र |
| ,, | ५ | द्रष्ट | द्रष्टृ |
| ,, | ६ | द्रष्ट्र | द्रष्टृ |
| ,, | ८ | प्रामाणं | प्रमाणं |
| ,, | ६ | द्रष्ट्र | द्रष्टृ |
| ,, | ११ | श्रद्‌ धाति | श्रद्धाति |
| ,, | ,, | श्रद्‌ धाति | श्रद्धाति |
| ,, | १३ | मानावेयताम् | मानावयेताम् |
| ,, | १४ | एव | एवं |
| ,, | ,, | ब्र याद | ब्रूयाद् |
| ,, | १६ | सर्वस्यपि | सर्वस्यापि |
| ,, | ,, | श्रतित्वं | श्रुतित्वं |
| ,, | १८ | नार्थद्रष्टर्न | नार्थद्रष्टुर्न |
| ३० | ३ | भतं | भूतं |
| ,, | ४ | अतिपत्तिः | प्रतिपत्तिः |
| ,, | ५ | श्रतयाः | श्रुतयाः |
| ,, | ११ | पुमर्मन्त्राश्च | पुनर्मन्त्राश्च |
| ,, | १२ | श्रतितत्वमेव | श्रतित्वमेव |
| ,, | १३ | द्रष्ट्रं | द्रष्टृ |
| ,, | १४ | स्मृतित्व | स्मृतित्वं |
| ३० | १६ | द्रष्ट्र | द्रष्टृ |
| ,, | १७ | प्रवतमानानि | प्रवर्तमानानि |
| ,, | ,, | द्रष्ट्र | द्रष्टृ |
| ,, | ,, | पत्तयातयोः | पत्त्यातयोः |
| ,, | २१ | त | ते |
| ,, | ,, | स्मृति | स्मृती |
| ,, | २४ | ज्ञानप्रधानाः | ब्राह्मणज्ञानप्रधानाः |
| ,, | ,, | ब्राह्मणो | ब्रह्मणो |
| ,, | २५ | ज्ञोनैकाद्वय | ज्ञानैकाद्वय |
| ३१ | ३ | स्वतन्त्रता | स्वतन्त्रा |
| ,, | ४ | इत्थमानयोः | इत्थमनयोः |
| ,, | ५ | ब्राह्मणमत | ब्राह्मणमतं |
| ,, | १४ | निरूपधिकं | निरुपधिकं |
| ,, | १६ | अथानाप्तावाक्यं | अथानाप्तवाक्यं |
| ,, | १७ | वक्तम् | वक्तुम् |
| ,, | १८ | करूण | करुण |
| ,, | १८ | समत्से | सभत्से |
| ,, | १६ | सामसां | सामासां |
| ,, | २० | चाप्रामाण्य | चाप्रामाण्यं |
| ,, | २४ | यथर्थानुभवः | यथार्थानुभवः |
| ,, | २५ | योश्च | योश्च |
| ,, | २६ | सर्वस्यैकनुभव | सर्वस्यैकानुभव |
| ३२ | ३ | विरुद्धार्थयो | विरुद्धार्थयो |
| ,, | ४ | भ्रान्तित्वमिवे | भ्रान्तित्वमिव |
| ,, | ५ | ज्ञानं | ज्ञान |
| ,, | ६ | मयथार्थमुत्तर | मयथार्थमुत्तरं |
| ,, | ८ | अथोतरानुभवेन | अथोत्तरानुभवेन |
| ,, | ,, | स्वविरूद्धस्य | स्वविरुद्धस्य |
| ,, | १० | विरूद्धो | विरुद्धो |
| ,, | १२ | वक्तुम | वक्तुम् |
| ,, | १६ | तावान्न्या | तावन्न्याय |
| ,, | १७ | तर्कभ्यां | तर्काभ्यां |
| ,, | २१ | सिंद्ध | सिद्धं |
| ,, | २२ | प्रपाञ्चित | प्रपञ्चितम् |
| ३३ | ३ | श्रद्धानाम् | श्रद्धानाम |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| ,, | ११ | तावन्नयाय: | तावन्याय: |
| ,, | १२ | प्रधान्त: | प्रधान: |
| ,, | ,, | पुनरागयप्रधानो | पुनरागमप्रधानो |
| ,, | ,, | ऽन्नुमान | ऽनुमान |
| ,, | २२ | निष्ठयै | निष्ठायै |
| ,, | २४ | मेतन्नयायाङ्ग | मेतन्न्यायाङ्ग |
| ,, | २५ | तदौपाथिकार्था | तदौपयिकार्थ |
| ३४ | १ | तत्रेदमिदनी | तत्रेदमिदानीं |
| ,, | ६ | मित्थर्नान्तराणि | मित्यनर्थान्तराणि |
| ,, | १० | इत्यादिषु | –त्यादिषु |
| ,, | १३ | शब्दा | शब्दा: - |
| ,, | १६ | वेदात | वेदता |
| ३५ | ३ | वाप्रमाद्यतो | प्रमाद्यतो |
| ,, | ६ | बह्निना | वह्निना |
| ,, | ७ | उपास्थिति | उपस्थिति |
| ,, | १२ | षेधेश्पूर्व | षेधेपूव |
| ,, | १३ | प्रमाण्यापवाद | प्रामाण्यापवाद |
| ,, | १४ | विरूद्ध: | विरुद्ध: |
| ,, | १५ | प्रत्यत्तदिव्यापार: | प्रत्यक्षादिव्यापार: |
| ,, | १६ | शब्दाविष्ठाया: | शब्दनिष्ठाया: |
| ,, | २० | विसवादाधीना | विसंवादाधीना |
| ३५ | २३ | द्रष्टराप्त | द्रष्टुराप्त |
| ३६ | ३ | विज्ञापयाम् | विज्ञापयाम |

| पृष्ठ | पंक्ति | शुद्ध | अशुद्ध |
|---|---|---|---|
| ,, | ७ | मेवामर्थ | मेवार्थ |
| ,, | ८ | प्रत्यायन्न | प्रत्याययन्न |
| ,, | ,, | प्रमाणे | प्रमाणं |
| ,, | ६ | सुमेरुपवतो | सुमेरुपर्वतो |
| ,, | ११ | मेरोर्यद्यापि | मेरोर्यद्यपि |
| ३७ | ४ | प्रत्यायनमपीद | प्रत्याययनमपीदं |
| ,, | ५ | चक्षुरपीतं | चक्षुरपीत |
| ,, | ,, | शङ्क | शङ्कं |
| ,, | ६ | शङ्क | शङ्कं |
| ,, | ७ | प्रत्याययदिंद | प्रत्याययादिंद |
| ,, | ,, | प्रामाण्येमयावापो | प्रामाण्यमेवापो |
| ,, | १५ | सदर्थ: | ऽसदर्थ: |
| ,, | १६ | सम्वन्ध स्याव | सम्वन्धस्याव |
| ,, | २२ | प्रमांण | प्रमाणं |
| ३८ | १ | प्रमाण्यनुपगम्यते | प्रमाण्यमुपगम्यते |
| ,, | ४ | आप्रामाण्य | अप्रामाण्यं |
| ,, | ६ | प्रामाण्य | प्रामाण्य |
| | ,, | गम्युमाने | गम्यमाने |
| ,, | ११ | मेवविधानां | मेवंविधानां |
| ,, | १४ | रुत्तरमापि | रुत्तरमपि |
| ३६ | ६ | तद्याप्त | यद्याप्त |
| ,, | ७ | म्युपगमो | भ्युपगमो |
| ,, | ६ | एतावाने लभ्यते | एतावाने व लभ्यते |



॥ श्रीः ॥

# * वेदधर्मव्याख्यानम् *

## वैदिकवैभवम् ।

*निबन्धा-विद्यावाचस्पति श्रीमधुसूदनशर्म्मा मैथिलः जयपुरराजपण्डितः ।*

### ( वेदभाषा )

वाचं देवा उपजीवन्ति विश्वे वाचं गन्धर्वाः पशवो मनुष्याः ।
वाचीमा विश्वा भुवनान्यर्पिता सा नो हवं जुषतामिन्द्रपत्नी ॥ १ ॥

वागक्षरं प्रथमजा ऋतस्य वेदानां माताऽमृतस्य नाभिः ।
सा नो जुषाणोपयज्ञमागादवन्ती देवी सुहवा मे अस्तु ॥ २ ॥

अयि विद्वज्जनमहाभागाः—

अद्य खलु देवभाषासाहित्यसम्बन्धिनीं कथामभिलक्ष्यैवात्मीयदत्ततानक्षुण्णमभिरक्षितुमिवाध्यक्षतायामस्यादक्षेश्वरस्येहोत्तरापथे मायाक्षेत्रे भगवन्तस्तत्र भवन्तः सर्वे नाना दिग्देशाभिनिवेशेभ्यः साभिनिवेशमभ्यागत्य सभ्या अदभ्या बुभूषन्तः सुशोभन्ते । स्थाने चैतत्कृतं सुकृतं कृतकृत्यम्मन्या वयं मन्यामहो यतोहि पुण्ययुगेऽप्येतां पथ्यास्वस्तिपदोपेतां दैवीं भाषां शिक्षितुमिहोत्तरापथ एवागच्छन्ति स्मेति वेदशास्त्रादवगच्छामः ॥ आम्नायते हि कौषीतकीयानां श्रुतौ—"अथब्रवीत् पथ्यास्वस्तिः—अहमेकां दिशं प्रज्ञास्यामीति । सोदीचीं दिशं प्राजानात् । वाग् वै पथ्यास्वस्तिः । तस्मादुदीच्यां दिशि प्रज्ञाततरा वागुद्यते । उदञ्च उ एव यन्ति वाचं शिक्षितुम् । यो वा तत आगच्छति तस्य वा शुश्रूषन्ते । इति ह स्माह—एषा हि वाचो दिक् प्रज्ञाता"—इति । तदेते वैदिक वैदिकसनातनधर्मानुयायिनो वयमपीदानीं तस्या निखिलविज्ञानमार्ग प्रकाशिकाया वैदिक्या देवभाषाया अभ्युदयेनैवात्मनोऽभ्युदये हृदयेन विश्वस्ता हृदयस्येन विश्वमहेश्वरेण प्रेरिताः सन्तस्तस्मिन्नेवोत्तरापथे मनोरथेन समागम्य संभूय च प्रवर्तमाना अञ्जसैवास्यां सिद्धिं गमिष्याम इति न नास्ति नोऽयं भूयायानन्दः ॥

अथेह केचिदाशङ्कन्ते निरातङ्कं धीरङ्काः—इह खलु पुरायुगीयानां वाचं शिक्षितुमुत्तरां दिशमनुधावतां प्रवृत्त्यैवानुमीयते किल-तदात्वेप्येषा दैवी भाषा नूनमासीदेव देवपदप्रसिद्धानामनूचानानां विदुषां वैज्ञानिकी भाषा शास्त्रानुगतैव न त्वेवैषा तदात्वेऽपि लोकभाषाऽऽसीदिति ॥ इतरथा मातृभाषाशिक्षणार्थं दूरदेशान्तरानुधावनं श्रूयमाणमसंबद्धं स्यादिति ॥ तान् प्रतिब्रूमः । न खलु भाषाव्यवहृतानां नामाख्यातादिपदानामर्थविज्ञानमात्रेणैव भाषाभिज्ञानमभिज्ञा अनुमोदन्ते । सन्ति हि भाषासाहित्यविज्ञानाय भूयांसि तस्या रहस्यानि वेदितव्यानि । तान्यविज्ञाय भाषामात्राभिज्ञा अप्यनभिज्ञा एव तत्र विज्ञायन्ते । उच्यमानमप्यर्थं हृदयेन यथावदिव ते नावबुध्यन्ते । अवबुध्यमाना अपि केचन यथाजाता यथावगतमर्थं परस्मै प्रत्याययितुं न पारयन्ते । भवन्ति च केषाञ्चिद्भाषणानि हृदयविदूषणानि, तान्येव पुनरन्येषां विदुषां शुश्रुवुषां हृदयग्राहकाणि हृदयाकर्षणानि च दृश्यन्ते । अथ केषांचिद्बहुलशब्दाडम्बराणि स्वल्पार्थसाराणि, परेषां पुनः परिमितोपयुक्तानि बहुलार्थगभीराणि । तानेतान् सर्वानेव साहित्यसम्बन्धिनो विशेषभावानाकलय्य यथायथमुपदर्शयन्तिस्म दूरदर्शिनो मन्त्रद्रष्टारः । यथा—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ॥
अत्रा सखायःसख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधि वाचि ॥ १ ॥
उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्नशृणोत्येनाम् ॥
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः ॥ २ ॥
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ॥
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ ३ ॥
यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ॥
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम् ॥ ४ ॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ॥
आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ॥ ५ ॥

इह मन्त्रवाक्ये सखिपदेनालङ्कारसंपन्नाया वाचो व्यवहारे निष्णाताः भाषासाहित्यविदो विद्वांसो विवक्षिताः, सख्यपदेन च साहित्यमिति वयं प्रतीमः ॥ अन्येऽप्येवंविधाः कतिचये मन्त्रा उपलभ्यन्ते ततो विज्ञायते मातृभाषाया अप्यनपेक्ष्य

